# लघ्वमोघानन्दिनी शिक्षा

पादादौ च पदादौ च सँय्योगावग्रहेषु च
जः शब्द इति विज्ञेयो योऽन्त्यः स य इति स्मृतः १
युक्तेन मनसा तद्वत्तत्वावामि तथापरम्
अनूकाशेन बाह्यं च तुरीयमनुया पदे २
पदादावप्यविच्छेदे सँय्योगान्ते च तिष्ठताम्
वर्ज्जयित्वा रहौ यानामीषत्स्पृष्टत्वमिष्यते ३
विद्व्यदी स्यमित्रांश्च रोचनास्य यथा भवेत्
तथा पार्याय्य सूर्यश्च मुह्यन्त्वन्ये समूह्यवत् ४
उपसर्गपरो यस्तु पदादिरपि दृश्यते
ईषत्पृष्टो यथा विद्यात्पदच्छेदात्परो भवेत् ५
विभाषया यकारश्च नित्यमाम्रेडितेऽपि च
यत्र यत्रेति मा यज्ञं तथा येति पदादपि ६
अथातऽउत्तरो यः स्यात्तथा नेति पदात्परः
भवन्त्येतेऽपि पूर्वत्र तथा च स पदादपि ७
अथा वयमादित्यादावथोयेऽस्य दृश्यते
न यत्परो यथा च स्यात्स पदे तदुदाहृताः ८

वो वा वा वै वि वौ पाठे उपसर्गात्परो लघुः
अथ मा स न शब्देभ्यो विभाषाऽम्रेडिते यवौ ९
यदेव लक्षणं यस्य वकारस्यापि तद्भवेत्
यत्र यत्र विशेषः स्यात्तदिदानीं तु कथ्यते १०
त्वदर्थवाचिनौ वो वां वा वै यदि निपातजौ
आदेशाश्च विकल्पार्था ईषत्स्पृष्टाश्च ते स्मृताः ११
देवीवः सविता या वां व्वातो वेति तथा न तत्
तत्र वाय्वृतस्पते तानऽ आवेति कीर्तिताः १२
यत्कृतं सूत्रकारेण तद्वत्स्यात्सम्प्रसारणम्
तज्ज्ञेयं सर्वशाखासु न तु वाजसनेयिनाम् १३
लक्षणस्य विरोधेऽपि पाठैक्यं यदि दृश्यते
तत्तथा प्रतिपत्तव्यं य्यज्ञा यज्ञा वऽइत्यथ १४
अनुस्वारो द्विमात्रः स्याद्दवर्णव्यञ्जनोदये
ह्रस्वाद्वा यदि वा दीर्घाद्देवानां हृदयेभ्यः १५
संस्रष्टा सिंह्यसि संय्योगे ह्रस्व इष्यते
मध्यमं श्रथायेति संय्योगो न द्विरुच्यते १६
ज्ञात्वा वेदविनाशं तु सम्यग् ब्रूयान्न वै बुधः
आहूय तं विविक्ते वै तस्य धर्मो न हीयते १७

इति श्रीलघ्वमोघानन्दिनी शिक्षा समाप्ता